पावको छप्टवर्णानां (?) शर्वरीकृतबन्धनः ।
मोक्षं न लभते कान्ते कम्पते तेन हेतुना॥८३॥

क प्रस्थितासि करभोरु घने निशीथे प्राणाधिपो वसति यत्र जनः प्रियो मे।
एकाकिनी वद कथं न बिभेषि बाले नन्वस्ति पुङ्खितशरो मदनः सहायः॥

यातु यातु किमनेन तिष्ठता मुञ्च मुञ्च सखि मादरं कुरु ।
केतकीकुसुमसौरभे रतो नान्यतो रतिमुपैति षट्पदः ॥८५॥

जयति मधुसहायः सर्वसंसारवल्ली-
जननजरठकन्दः कोऽपि कन्दर्पदेवः ।
तदनु पुनरपाङ्गोत्सङ्ग संचारितानां
जयति तरुणयोषिल्लोचनानां विलासः ॥८६॥



८२—८३ ઓળિયામાં આ શ્લોકો છે નહિ અને જૂની ગુજરાતીનો પણ છે નહિ. ८४ सुभा० । १३४६ । આ શ્લોક પોથીમાં નહિ. ८५ આ શ્લોક પોથીમાં છે નહિ અને જૂની ગુજરાતીનો પણ છે નહિ. ८६ ઓળિયામાં આને ઠેકાણે નીચેનો શ્લોક છે:

गतिशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन हि मूर्खाणां निद्रया कलहेन वा ॥